॥ श्रीगणेशाय नमः ॥ ॥ सबिन्दुसिन्धुसुस्खल-
त्तरङ्गभङ्गरञ्जितं द्विषत्सु पापजातजातकारिवा-
रिसंयुतम् ॥ कृतान्तदूतकालभूतभीतिहारि वर्मदे
त्वदीयपादपङ्कजं नमामि देवि नर्मदे ॥ १ ॥ त्व-
दंबुलीनदीनमीनदिव्यसंप्रदायकं कलौ मलौघ-
भारहारिसर्वतीर्थनायकम् ॥ सुमत्स्यकच्छनक्रच-
क्रचक्रवाकशर्मदे त्वदीयपादपङ्कजन्नमामि देवि
नर्मदे ॥ २ ॥ महागभीरनीरपूरपापधूतभूतलं

ध्वनत्समस्तपातकारिदारितापदाचलम् ॥ जगल्लये
महाभये मृकंडसूनुहर्म्यदे त्वदीयपादपङ्कजन्नमा-
मि देवि नर्मदे ॥ ३ ॥ गतन्तदैव मे भयंत्वदंबु
वीक्षितं यदा मृकण्डसूनुशौनकासुरारिसेवि सर्वदा ॥
पुनर्भवाब्धिजन्मजं भवाब्धिदुःखवर्मदे त्वदीय-
पादपङ्कजन्नमामि देवि नर्मदे ॥ ४ ॥ अलक्षल-
क्षकिन्नरामरासुरारिपूजितं सुलक्षनीरतीरधीरपक्षि-
लक्षकूजितम् ॥ वसिष्ठशिष्टपिप्पलादिकर्दमादिश-

र्मदे त्वदीयपादपङ्कजन्नमामि देवि नर्मदे ॥ ५ ॥
सनत्कुमारनाचिकेतकश्यपात्रिषट्पदैर्धृतं स्वकी-
यमानसेषु नारदादिषट्पदैः ॥ रवीन्दुरन्तिदेवदेव-
राजकर्मशर्मदे त्वदीयपादपङ्कजन्नमामि देवि न-
र्मदे ॥ ६ ॥ अलक्षलक्षलक्षपापलक्षसारसायुधं ततस्तु
जीवजंतुतंतुभुक्तिमुक्तिदायकम् ॥ विरिञ्चिवि-
ष्णुशङ्करस्वकीयधामवर्मदे त्वदीयपादपङ्कजन्न-
मामि देवि नर्मदे ॥ ७ ॥ अहो मृतं स्वनं श्रुतं

महेशकेशजाततटे किरातसूतवाडवेषु पंडिते शठे नटे ॥ दुरस्तपापतापहारि सर्वजंतुशर्मदे त्वदीयपादपङ्कजन्नमामि देवि नर्मदे ॥ ८ ॥ इदं तु नर्मदाष्टकं त्रिकालमेव ये सदा पठंति ते निरंतरं न यांति दुर्गतिं कदा ॥ सुलभ्यदेहदुर्लभं महेशधाम गौरवं पुनर्भवा नरा न वै विलोकयंति रौरवम् ॥ ९ ॥ इति श्रीमत्परमहंस परिव्राजकाचार्य-

श्रीमच्छंकराचार्यविरचितं नर्मदाष्टकस्तोत्रं संपूर्णम् ॥ श्री नर्मदार्पणमस्तु ॥

मुम्बय्याम्
श्रीयुतभगीरथात्मजेन हरिप्रसादशर्मणा
"गुजराती प्रिंटींग प्रेस" मुद्रणालये मुद्रितम्
शकः १८३४ सन १९१२
इच्छाराम सूर्यराम देसाईने " गुजराती प्रिंटिंग प्रेसमें छापा. "
कोट सासन बिल्डिंग—मुंबई.

